ॐ
श्री लक्ष्मीनृसिंह परब्रह्मणे नमः ।
श्री पद्मावती समेत वेङ्कटेशाय नमः ।
श्री विष्णवे परमात्मने नमः ।
श्रीमते रामानुजाय नमः ।
श्री निगमान्त महा देशिकाय नमः ।
श्री सायिराम् ।

॥ आदित्यहृदयम् ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ २ ॥

राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥ ३ ॥

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यमक्षय्यं परमं शुभम् ॥ ४ ॥

सर्वमङ्गळमाङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोक प्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥

रश्मिमन्तं समुद्यन्तं देवासुर नमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
येष देवासुरगणान् लोकान् पाति गभस्तिभिः ॥ ७ ॥

येष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमः सोमोह्यापाम्पतिः ॥ ८ ॥

पितरो वसवःसाध्या ह्यश्विनौ मरुतो मनुः ।

वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुः स्वर्णरेता दिवाकरः ॥ १० ॥

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्ताण्ड अंशुमान् ॥ ११ ॥

हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः ।
अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥

व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः ।
घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥ १३ ॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः ।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥

नक्षत्र ग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तुते ॥ १५ ॥

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥

जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥

नम उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥ १८ ॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥

नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष एवाग्निहोत्रञ्च फलञ्चैवाग्निहोत्रिणाम् ॥ २३ ॥

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥ २४ ॥

॥ फलश्रुतिः ॥

एनमापत्सु कृच्छ्रेषु कान्तारेषुभयेषुच ।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत् त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥

अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि ।
एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥ २७ ॥

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥

आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥

रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ।
सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३० ॥

अथ रविरवदन्निरीक्ष्य रामं
मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसङ्क्षयं विदित्वा
सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥

॥ सरस्वति प्रार्थना ॥

सरस्वती नमस्तुभ्यं वरदे कामरूपिणी ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥ १ ॥

पद्मपत्र विशालाक्षी पद्म केसरवर्णिनी ।
नित्यं पद्मालयादेवी सा माम्पातु सरस्वती ॥ २ ॥

याकुन्देन्दु तुषारहारधवळा याशुभ्र वस्त्रान्विता
यावीणा वरदण्डमण्डितकरा या श्वेत पद्मासना ।
याब्रह्माच्युत शङ्करप्रभृतिभिर्देवैस्सदा पूजिता
सामाम्पातु सरस्वती भगवती निश्शेषजाड्यापहा ॥ ३ ॥

॥ विघ्नेश्वर प्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्न वदनं ध्यायेत् सर्व विघ्नोपशान्तये ॥ १ ॥

अगजानन पद्मार्कं गजानन महर्निशम् ।
अनेकदन्तं भक्तानां एकदन्तमुपास्महे ॥ २ ॥

यं ब्रह्म वेदान्तविदो वदन्ति
परे प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरंवा
तस्मै नमो विघ्नविनायकाय ॥ ३ ॥

एकदन्तं महाकायं तप्तकांचन सन्निभम् ।
लम्बोदरं विशालाक्षं वन्देऽहं गणनायकम् ॥ ४ ॥

मौञ्जी कृष्णाजिनधरं नाग यज्ञोपवीतिनम् ।
बालेन्दु शकलं मौळौ वन्देऽहं गणनायकम् ॥ ५ ॥

चित्ररत्न विचित्राङ्ग चित्रमाला विभूषितम् ।
कामरूपधरं देवं वन्देऽहं गणनायकम् ॥ ६ ॥

मूषकोत्तममारुह्य देवासुरमहाहवे ।
योद्धुकामं महावीर्यं वन्देऽहं गणनायकम् ॥ ७ ॥

गजवक्त्रं सुरश्रेष्ठं कर्णचामर भूषितम् ।

पाशाङ्कुशधरं देवं वन्देऽहं गणनायकम् ॥ ८ ॥

यक्षकिन्नर गन्धर्व सिद्ध विद्याधरैस्सदा ।
स्तूयमानं महाबाहुं वन्देऽहं गणनायकम् ॥ ९ ॥

अम्बिकाहृदयानन्दं मातृभिः परिवेष्टितम् ।
भक्तप्रियं मदोन्मत्तं वन्देऽहं गणनायकम् ॥ १० ॥

सर्वविघ्नकरं देवं सर्वविघ्न विवर्जितम् ।
सर्वसिद्धिप्रदातारं वन्देऽहं गणनायकम् ॥ ११ ॥

मूषकवाहन मोदकहस्त चामरकर्ण विलम्बितसूत्र ।
वामनरूप महेश्वर पुत्र विघ्नविनायक पादनमस्ते ॥ १२ ॥

गजाननं भूतगणाधिसेवितम्
कपित्थ जम्बूफलसार भक्षणम् ।
उमासुतं शोकविनाशकारणम्
नमामि विघ्नेश्वर पादपङ्कजम् ॥ १३ ॥

गणाष्टकमिदम्पुण्यं यःपठेत्सततं नरः ।
सिद्ध्यन्ति सर्वकार्याणि विद्यावान् धनवान् भवेत् ॥ १४ ॥

अस्मद् गुरुभ्यो नमः ।
अस्मत्परम गुरुभ्यो नमः ।
अस्मत्सर्व गुरुभ्यो नमः ।
श्रीमते श्री आदिवण् शठकोप यतीन्द्र महा देशिकाय नमः ।

यस्याभवद्भक्त जनार्तिहन्तुः
पितृत्वमन्येष्वविचार्य तूर्णम् ।
स्तम्भेऽवतारस्तमनन्यलभ्यं
लक्ष्मी नृसिंहं शरणं प्रपद्ये ॥

श्रीमान् वेङ्कट नाथार्यः कवितार्किक केसरी ।
वेदान्ता चार्य वर्योमे सन्निधत्तां सदाहृदि ॥

गुरुभ्यस्तद् गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥

श्रीमन्नभीष्ट वरद ।
त्वामस्मि शरणं गतः ॥

स्वशेष भूतेन मया स्वीयैः सर्व परिच्छदैः ।
विधातुं प्रीतमात्मानं देवः प्रक्रमते स्वयम् ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशान्तये ॥

यस्य द्विरद वक्त्राद्याः पारिषद्याः परःशतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

श्रीहयग्रीवस्तोत्रम्

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ १ ॥

ज्ञानानन्दमयं देवं

स्वतस्सिद्धं शुद्धस्फटिक मणिभूभृत्प्रतिभटं
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहित हेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥ २ ॥

स्वतस्सिद्धं शुद्धस्फटिक

समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कथककुलकोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदन हेषा हलहलः ॥ ३ ॥

प्राची सन्ध्या काचिदन्तर्निशायाः

प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान् भातु मे वाजिवक्त्रा
वागीशाख्या वासुदेवस्य मूर्तिः ॥ ४ ॥

विशुद्ध विज्ञानघन स्वरूपं

विज्ञान विश्राणन बद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं
देवं हयग्रीवमहं प्रपद्ये ॥ ५ ॥

अपौरुषेयैरपि वाक्प्रपञ्चैः
अद्यापि ते भूतिमदृष्टपाराम् ।
स्तुवन्नहं मुग्ध इति त्वयैव
कारुण्यतो नाथ कटाक्षणीयः ॥ ६ ॥

दाक्षिण्यरम्या गिरिशस्य मूर्तिः
देवी सरोजासनधर्मपत्नी ।
व्यासादयोऽपि व्यपदेश्यवाचः
स्फुरन्ति सर्वे तव शक्तिलेशैः ॥ ७ ॥

मन्दोऽभविष्यन्नियतं विरिञ्चो
वाचां निधे वञ्चित भागधेयः ।
दैत्यापनीतान् दययैव भूयोऽपि
अध्यापयिष्यो निगमान् न चेत् त्वाम् ॥ ८ ॥

वितर्कडोलां व्यवधूय सत्वे
बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देव त्रिदशेश्वराणाम्
अस्पृष्ट डोलायितमाधिराज्यम् ॥ ९ ॥

अग्नोउ समिद्धार्चिषि सप्ततन्तोः
आतस्थिवान् मन्त्रमयं शरीरम् ।
अखण्ड सारैर्हविषां प्रदानैः
आप्यायनं व्योमसदां विधत्से ॥ १० ॥

यन्मूलमीदृक् प्रतिभाति तत्वं
या मूलमाम्नाय महाद्रुमाणाम् ।
तत्वेन जानन्ति विशुद्ध सत्वाः
त्वामक्षरामक्षरमातृकां ते ॥ ११ ॥

अव्याकृताद् व्याकृत वानसि त्वं
नामानि रूपाणि च यानि पूर्वम् ।
शंसन्ति तेषां चरमां प्रतिष्ठां
वागीश्वर त्वां त्वदुपज्ञवाचः ॥ १२ ॥

मुग्धेन्दु निष्यन्द विलोभनीयां
मूर्तिं तवानन्द सुधा प्रसूतिम् ।
विपश्चितश्चेतसि भावयन्ते
वेलामुदारामिव दुग्धसिन्धोः ॥ १३ ॥

मनोगतं पश्यति यः सदा त्वां
मनीषिणां मानस राजहंसम् ।
स्वयं पुरोभाव विवादभाजः
किङ्कुर्वते तस्य गिरो यथार्हम् ॥ १४ ॥

अपि क्षणार्धं कलयन्ति ये त्वां
आप्लावयन्तं विशदैर्मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते
मन्दाकिनीं मन्दयितुं क्षमन्ते ॥ १५ ॥

स्वामिन् भवद्ध्यान सुधाभिषेकात्
वहन्ति धन्याः पुलकानुबन्धम् ।
अलक्षिते क्वापि निरूढमूलं
अङ्गेष्विवानन्दथुम् अङ्कुरन्तम् ॥ १६ ॥

स्वामिन् प्रतीचा हृदयेन धन्याः
त्वद्ध्यन चन्द्रोदय वर्धमानम् ।
अमान्तमानन्द पयोधिमन्तः
पयोभिरक्ष्णां परिवाहयन्ति ॥ १७ ॥

स्वैरानुभावास्त्वदधीन भावाः
समृद्धवीर्यास्त्वदनुग्रहेण ।
विपश्चितो नाथ तरन्ति मायां
वैहारिकीं मोहन पिञ्छिकां ते ॥ १८ ॥

प्राङ् निर्मितानां तपसां विपाकाः
प्रत्यग्रनिश्श्रेयस सम्पदो मे ।
समेधिषीरंस्तव पादपद्मे
सङ्कल्प चिन्तामणयः प्रणामाः ॥ १९ ॥

विलुप्त मूर्धन्य लिपिक्रमाणां
सुरेन्द्र चूडापद लालितानाम् ।

त्वदङ्घ्रिराजीव रजः कणानां
भूयान् प्रसादो मयि नाथ भूयात् ॥ २० ॥

परिस्फुरन्नूपुरचित्रभानु -
प्रकाश निर्धूत तमोनुषङ्गाम् ।
पदद्वयीं ते परिचिन्महेऽन्तः
प्रबोध राजीव विभातसन्ध्याम् ॥ २१ ॥

त्वत्किङ्करालङ्करणोचितानां
त्वयैव कल्पान्तर पालितानाम् ।
मञ्जुप्रणादं मणिनूपुरं ते
मञ्जूषिकां वेदगिरां प्रतीमः ॥ २२ ॥

संचिन्तयामि प्रतिभादशास्थान्
संधुक्षयन्तं समयप्रदीपान् ।
विज्ञान कल्पद्रुम पल्लवाभं
व्याख्यान मुद्रा मधुरं करं ते ॥ २३ ॥

चित्ते करोमि स्फुरिताक्षमालं
सव्येतरं नाथ करं त्वदीयम् ।
ज्ञानामृतोदञ्चन लम्पटानां
लीलाघटीयन्त्रमिवाश्रितानाम् ॥ २४ ॥

प्रबोध सिन्धोररुणैः प्रकाशैः
प्रवाल सङ्घातमिवोद्वहन्तम् ।
विभावये देव सपुस्तकं ते
वामं करं दक्षिणमाश्रितानाम् ॥ २५ ॥

तमांसि भित्वा विशदैर्मयूखैः
सम्प्रीणयन्तं विदुषश्चकोरान् ।
निशामये त्वां नवपुण्डरीके
शरद्घने चन्द्रमिव स्फुरन्तम् ॥ २६ ॥

दिशन्तु मे देव सदा त्वदीयाः
दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं
सरस्वतीं संश्रित कामधेनुम् ॥ २७ ॥

विशेषवित्वारिषदेषु नाथ
विदग्ध गोष्ठीसमराङ्गणेषु ।
जिगीषतो मे कवितार्किकेन्द्रान्
जिह्वाग्र सिंहासनमभ्युपेयाः ॥ २८ ॥

त्वां चिन्तयंस्त्वन्मयतां प्रपन्नः
त्वामुद्गृणन् शब्दमयेन धाम्ना ।
स्वामिन् समाजेषु समेधिषीय
स्वच्छन्द वादाहव बद्धशूरः ॥ २९ ॥

नानाविधानामगतिः कलानां
न चापि तीर्थेषु कृतावतारः ।
ध्रुवं तवानाथपरिग्रहायाः
नवं नवं पात्रमहं दयायाः ॥ ३० ॥

अकम्पनीयान्यपनीति भेदैः
अलंकृषीरन् हृदयं मदीयम् ।
शङ्काकलङ्का पगमोज्ज्वलानि
तत्वानि सम्यञ्चि तव प्रसादात् ॥ ३१ ॥

व्याख्या मुद्रां करसरसिजैः पुस्तकं शङ्कचक्रे
बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन् मां
आविर्भूयादनघ महिमा मानसे वागधीशः ॥ ३२ ॥

व्याख्या मुद्रां करसरसिजैः

वागर्थ सिद्धिहेतोः
पठत हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किक केसरिणा
वेङ्कटनाथेन विरचितामेताम् ॥ ३३ ॥

वागर्थ सिद्धिहेतोः

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ दशावतार स्तोत्रम् ॥

श्रीमान् वेङ्कट नाथार्यः कवितार्किक केसरी ।
वेदान्ता चार्य वर्योमे सन्निधत्तां सदाहृदि ॥

देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रङ्गे धामनि लब्ध निर्भर रसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १ ॥

देवो नः शुभमातनोतु

निर्मग्न श्रुति जाल मार्गण दशा दत्त क्षणैर्वीक्षणैः
अन्तस्तन्वदिवारविन्द गहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूह तरङ्ग रिङ्गण मिथः प्रत्यूढ पाथश्छटा -
डोलारोह सदोहलं भगवतो मात्स्यं वपुः पातु नः ॥ २ ॥

अव्यासुर्भुवन त्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्म वपुषो निश्वास वातोर्मयः ।
यद्विक्षेपण संस्कृतो दधिपयः प्रेङ्खोलपर्यङ्किका -
नित्यारोहण निर्वृतो विहरते देवः सहैव श्रिया ॥ ३ ॥

गोपायेदनिशं जगन्ति कुहना पोत्री पवित्री कृत -
ब्रह्माण्डः प्रलयोर्मि घोष गुरुभिर्घोणा रवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुर कोटि गाढ घटना निष्कम्प नित्य स्थितिः
ब्रह्म स्तम्बमसौदसौ भगवती मुस्तेव विश्वम्भरा ॥ ४ ॥

प्रत्यादिष्ट पुरातन प्रहरण ग्रामः क्षणं पाणिजैः
अव्यात् त्रीणि जगन्त्यकुण्ठ महिमा वैकुण्ठ कण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्य जठरा यादृच्छिकाद् वेधसां
या काचित् सहसा महासुर गृह स्थूणा पितामह्यभूत् ॥ ५ ॥

व्रीडा विद्ध वदान्य दानव यशो नासीर धाटी भटः
त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्ताव समुच्छ्रित ध्वज पटी वृत्तान्त सिद्धान्तिभिः
स्रोतोभिः सुरसिन्धुरष्टसु दिशा सौधेषु दोधूयते ॥ ६ ॥

क्रोधाग्निं जमदग्नि पीडन भवं सन्तर्पयिष्यन् क्रमात्

अक्षत्रामपि सन्ततक्ष य इमां त्रिःसप्त कृत्वः क्षितिम् ।
दत्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्
अब्रह्मण्यमपाकरोतु भगवानाब्रह्म कीटं मुनिः ॥ ७ ॥

पारावार पयो विशोषण कला पारीण कालानल -
ज्वाला जाल विहार हारि विशिख व्यापार घोर क्रमः ।
सर्वावस्थ सकृत्प्रपन्न जनता संरक्षणैक व्रती
धर्मो विग्रहवानधर्म विरतिं धन्वी स तन्वीत नः ॥ ८ ॥

फक्कत्कौरव पट्टण प्रभृतयः प्रास्त प्रलम्बादयः
तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैः
आकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९ ॥

नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्र क्रमैः
भूयोभिर्भुवनान्यमूनि कुहना गोपाय गोपायते ।
कालिन्दी रसिकाय कालिय फणि स्फार स्फटा वाटिका -
रङ्गोत्सङ्ग विशङ्क चंक्रमधुरा पर्यायचर्या यते ॥ १० ॥

भाविन्या दशया भवन्निह भव ध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलि कथा कालुष्य कूलङ्कषः ।
निःशेष क्षत कण्टके क्षितितले धारा जलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंश धाराधरः ॥ ११ ॥

इच्छा मीन विहार कच्छप महा पोत्रिन् यदृच्छा हरे
रक्षा वामन रोष राम करुणा काकुत्स्थ हेला हलिन् ।
क्रीडा वल्लव कल्क वाहन दशा कल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघ पण्यापणाः ॥

विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं
देवेशस्य दशावतार विषयं स्तोत्रं विवक्षेत यः ।
वक्त्रे तस्य सरस्वती बहु मुखी भक्तिः परा मानसे
शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ न्यास दशकम् ॥

श्रीमान् वेङ्कट नाथार्यः कवितार्किक केसरी ।
वेदान्ता चार्य वर्योमे सन्निधत्तां सदाहृदि ॥

अहं मद्रक्षण भरो मद्रक्षण फलं तथा ।
न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद् बुधः ॥ १ ॥

न्यस्याम्यकिञ्चनः श्रीमन्ननुकूलोऽन्यवर्जितः ।
विश्वास प्रार्थना पूर्वम् आत्मरक्षा भरं त्वयि ॥ २ ॥

स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्त स्वधिया स्वार्थं स्वस्मिन् न्यस्यति मां स्वयम् ॥ ३ ॥

श्रीमन्नभीष्ट वरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥ ४ ॥

त्वच्छेषत्वे स्थिर धियं त्वत्प्राप्त्येक प्रयोजनम् ।
निषिद्ध काम्य रहितं कुरु मां नित्य किङ्करम् ॥ ५ ॥

देवी भूषण हेत्यादि जुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैंकर्येषु नियुङ्क्ष्व माम् ॥ ६ ॥

मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैंकर्योपकरणं वरद स्वीकुरु स्वयम् ॥ ७ ॥

त्वदेकरक्ष्यस्य मम त्वमेव करुणाकर ।
नप्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥ ८ ॥

अकृत्यानां च करणं कृत्यानां वर्जनं च मे ।
क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥ ९ ॥

श्रीमान् नियत पञ्चाङ्गं मद्रक्षण भरार्पणम् ।
अचीकरत् स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ॥ १० ॥

संसारावर्त वेग प्रशमन शुभदृग्देशिक प्रेक्षितोऽहं
सन्त्यक्तोऽन्यैरुपायैरनुचित चरितोष्वद्य
शान्ताभिसन्धिः ।

निःशङ्कस्तत्वदृष्ट्या निरवधिकदयं प्रार्थ्य
संरक्षकं त्वां
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ सुदर्शनाष्टकम् ॥

श्रीमान् वेङ्कट नाथार्यः कवितार्किक केसरी ।
वेदान्ता चार्य वर्योमे सन्निधत्तां सदाहृदि ॥

प्रतिभट श्रेणि भीषण वर गुण स्तोम भूषण
जनिभय स्थान तारण  जगदवस्थान कारण ।
निखिल दुष्कर्म कर्शन  निगम सद्धर्म दर्शन
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ १ ॥

शुभ जगद्रूप मण्डन  सुर गण त्रास खण्डन
शत-मख ब्रह्म वन्दित शत-पथ ब्रह्म नन्दित ।
प्रथित विद्वत्सपक्षित  भजदहिर्बुध्न्य लक्षित
जय जय श्री सुदर्शन जय जय श्री सुदर्शन ॥ २ ॥

स्फुट तटिज्जाल पिञ्जर पृथु-तर ज्वाल पञ्जर
परिगत प्रत्न विग्रह  परिमित प्रज्ञ दुर्ग्रह ।
प्रहरण ग्राम मण्डित परिजनत्राण पण्डित
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ ३ ॥

निज पद प्रीत सद्गण निरुपधि स्फीत षड्गुण
निगम निर्व्यूढ वैभव निज पर व्यूह वैभव ।
हरि हय द्वेषि दारण  हर पुर प्लोष कारण
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ ४ ॥

दनुज विस्तार कर्तन  जनि तमिस्रा विकर्तन
दनुज विद्या निकर्तन  भजदविद्या निवर्तन ।
अमर दृष्ट स्व विक्रम  समर जुष्ट भ्रमि क्रम
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ ५ ॥

प्रतिमुखालीढ बन्धुर पृथु महा हेति दन्तुर
विकट माया बहिष्कृत  विविध माला परिष्कृत ।
पृथु महायन्त्र तन्त्रित दृढ दया तन्त्र यन्त्रित
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ ६ ॥

महित सम्पत्सदक्षर  विहित सम्पत्षडक्षर
षडर चक्र प्रतिष्टित सकल तत्व प्रतिष्टित ।
विविध सङ्कल्प कल्पक  विबुध सङ्कल्प कल्पक
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ ७ ॥

भुवन नेतस्त्रयीमय  सवन तेजस्त्रयीमय
निरवधि स्वादु चिन्मय  निखिल शक्ते जगन्मय ।
अमित विश्व क्रियामय  शमित विष्वग्भयामय
जय जय श्री सुदर्शन जय जय श्री सुदर्श्नन ॥ ८ ॥

द्विचतुष्कमिदं प्रभूत सारं
पटतां वेङ्कटनायक प्रणीतं
विषमेऽपि मनोरथः प्रधावन्
न विहन्येत रथाङ्गधुर्यगुप्तः

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ वैराग्य पञ्चकम् ॥

क्षोणी कोण शतांश पालन कला दुर्वार गर्वानल-
क्षुभ्यत्क्षुद्र नरेन्द्र चाटु रचना धन्यान् न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
दाना मुष्टिमुचे कुचेल मुनये दत्ते स्म वित्तेशताम् ॥ १ ॥

सिलं किमनलं भवेदनलमौदरं बाधितुं
पयः प्रसृति पूरकं किमु न धारकं सारसम् ।
अयत्र मल मल्लकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ॥ २ ॥

ज्वलतु जलधि क्रोड क्रीडत्कृपीड भव प्रभा-
प्रतिभट पटु ज्वाला मालाकुलो जठरानलः ।

तृणमपि वयं सायं सम्फुल्ल मल्लि मतल्लिका
परिमलमुचा वाचा याचामहे न महीश्वरान् ॥ ३ ॥

दुरीश्वर द्वार बहिर्वितर्दिका-
दुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे
धनञ्जय स्यन्दन भूषणं धनम् ॥ ४ ॥

शरीर पतनावधि प्रभु निषेवणापादनात्
अबिन्धन धनञ्जय प्रशमदं धनं दन्धनम् ।
धनञ्जय विवर्धनं धनमुदूढ गोवर्धनं
सुसाधनमबाधनं सुमनसां समाराधनम् ॥ ५ ॥

नास्ति पित्रार्जितं किञ्चिन्न मया किञ्चिदार्जितम् ।
अस्ति मे हस्ति शैलाग्रे वस्तु पैतामहं धनम् ॥ ६ ॥

॥ श्रीस्तुतिः ॥

मानातीत प्रथित विभवां मङ्गलं मङ्गलानां
वक्षः पीठीं मधु विजयिनो भूषयन्तीं स्वकान्त्या ।
प्रत्यक्षानुश्रविक महिम प्रार्थिनीनां प्रजानां
श्रेयो मूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ १ ॥

आविर्भावः कलश जलधावध्वरे वापि यस्याः
स्थानं यस्याः सरसिज वनं विष्णु वक्षः स्थलं वा ।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा
स्तोक प्रज्ञैरनवधि गुणा स्तूयसे सा कथं त्वम् ॥ २ ॥

स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना
तामेव त्वामनितर गतिः स्तोतुमाशंसमानः ।
सिद्धारम्भः सकल भुवन श्लाघनीयो भवेयं
सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ३ ॥

यत्सङ्कल्पाद्भवति कमले यत्र देहिन्यमीषां
जन्म स्थेम प्रलय रचना जङ्गमाजङ्गमानाम् ।
तत् कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ
पूर्णं तेजः स्फुरति भवती पाद लाक्षा रसाङ्कम् ॥ ४ ॥

निष्प्रत्यूह प्रणय घटितं देवि नित्यानपायं
विष्णुस्त्वं चेत्यनवधिगुणं द्वन्द्वमन्योन्य लक्ष्यम् ।
शेषश्चित्तं विमल मनसां मौलयश्च श्रुतीनां
सम्पद्यन्ते विहरण विधौ यस्य शय्या विशेषाः ॥ ५ ॥

उद्देश्यत्वं जननि भजतोरुज्झितोपाधि गन्धं
प्रत्यग्रूपे हविषि युवयोरेक शेषित्व योगात् ।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो
नावच्छेदं भजति महिमा नर्तयन् मानसं नः ॥ ६ ॥

पश्यन्तीषु श्रुतिषु परितः सूरि बृन्देन सार्धं
मध्ये कृत्य त्रिगुण फलकं निर्मित स्थान भेदम् ।
विश्वाधीश प्रणयिनि सदा विभ्रम द्यूत वृत्तौ
ब्रह्मेशाद्या दधति युवयोरक्ष शार प्रचारम् ॥ ७ ॥

अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधि तनया विष्णु पत्नीन्दिरेति ।
यन्नामानि श्रुति परिपणान्येवमावर्तयन्तो
नावर्तन्ते दुरित पवन प्रेरिते जन्म चक्रे ॥ ८ ॥

त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं
किं तैरन्तः कलह मलिनैः किञ्चिदुत्तीर्य मग्नैः ।
त्वत्सम्प्रीत्यै विहरति हरौ सम्मुखीनां श्रुतीनां
भावारूढौ भगवति युवां दम्पती दैवतं नः ॥ ९ ॥

आपन्नार्ति प्रशमन विधौ बद्ध दीक्षस्य विष्णोः
आचख्युस्त्वां प्रिय सहचरिमैकमत्योपपन्नाम् ।
प्रादुर्भावैरपि सम तनुः प्राध्वमन्वीयसे त्वं
दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ १० ॥

धत्ते शोभां हरि मरकते तावकी मूर्तिराद्या
तन्वी तुङ्ग स्तनभर नता तप्त जाम्बूनदाभा ।
यस्यां गच्छन्त्युदय विलयैर्नित्यमानन्द सिन्धौ
इच्छा वेगोल्लसित लहरी विभ्रमं व्यक्तयस्ते ॥ ११ ॥

आसंसारं विततमखिलं वाङ्मयं यद्विभूतिः
यद् भ्रू भङ्गात् कुसुम धनुषः किङ्करो मेरु धन्वा ।

यस्यां नित्यं नयन शतकैरेक लक्ष्यो महेन्द्रः
पद्मे तासां परिणतिरसौ भाव लेशैस्त्वदीयैः ॥ १२ ॥

अग्रे भर्तुः सरसिज मये भद्र पीठे निषण्णाम्
अम्भो राशेरधिगत सुधा सम्प्लवादुत्थितां त्वाम् ।
पुष्पासार स्थगित भुवनैः पुष्कलावर्तकाद्यैः
क्लृप्तारम्भाः कनक कलशैरभ्यषिञ्चन् गजेन्द्राः ॥ १३ ॥

आलोक्य त्वाममृत सहजे विष्णु वक्षःस्थलस्थां
शापाक्रान्ताः शरणमगमन् सावरोधाः सुरेन्द्राः ।
लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः
सर्वाकार स्थिर समुदयां सम्पदं निर्विशन्ति ॥ १४ ॥

आर्त त्राण व्रतिभिरमृतासार नीलाम्बुवाहैः
अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ।
यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया
तस्यां तस्यामहमहमिकां तन्वते सम्पदोघाः ॥ १५ ॥

योगारम्भ त्वरित मनसो युष्मदैकान्त्य युक्तं
धर्मं प्राप्तुं प्रथममिह ये धारयन्ते धनायाम् ।
तेषां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा
धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ १६ ॥

श्रेयस्कामाः कमलनिलये चित्रमाम्नाय वाचां
चूडापीडं तव पद युगं चेतसा धारयन्तः ।
छत्र च्छाया सुभग शिरसश्चामर स्मेर पार्श्वाः
श्लाघाशब्द श्रवण मुदिताः स्रग्विणः सञ्चरन्ति ॥ १७ ॥

ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन्
दूरीकर्तुं दुरित निवहं त्यक्तुमाद्यामविद्याम् ।
अम्ब स्तम्बावधिक जनन ग्राम सीमान्त रेखाम्
आलम्बन्ते विमल मनसो विष्णु कान्ते दयां ते ॥ १८ ॥

जाताकाङ्क्षा जननि युवयोरेक सेवाधिकारे
मायालीढं विभवमखिलं मन्यमानास्तृणाय ।
प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते
वेलाभङ्गः प्रशमन फलं वैदिकं धर्मसेतुम् ॥ १९ ॥

सेवे देवि त्रिदश महिला मौलि मालार्चितं ते
सिद्धि क्षेत्रं शमित विपदां सम्पदां पाद पद्मम् ।
यस्मिन्नीषन्नमित शिरसो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २० ॥

सानुप्रास प्रकटित दयैः सान्द्र वात्सल्य दिग्धैः
अम्ब स्निग्धैरमृत लहरी लब्ध सब्रह्मचर्यईः ।
धर्मे ताप त्र य विरचिते गाढ तप्तं क्षणं माम्
आकिञ्चन्य ग्लपितमनघैरार्द्रयेथाः कटाक्षैः ॥ २१ ॥

सम्पद्यन्ते भव भय तमी भानवस्त्वत्प्रसादात्
भावाः सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ।
याचे किं त्वामहमिह यतः शीतलोदार शीला
भूयो भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २२ ॥

माता देवि त्वमसि भगवान् वासुदेवः पिता मे
जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः ।
दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं
किं ते भूयः प्रियमिति किल स्मेर वक्त्रा विभासि ॥ २३ ॥

कल्याणानामविकल निधिः काऽपि कारुण्य सीमा
नित्यामोदा निगम वचसां मौलि मन्दार माला ।
सम्पद्दिव्या मधु विजयिनः सन्निधत्तां सदा मे
सैषा देवी सकल भुवन प्रार्थना कामधेनुः ॥ २४ ॥

उपचित गुरु भक्तेरुत्थितं वेङ्कटेशात्
कलि कलुष निवृत्त्यै कल्पमानं प्रजानाम् ।
सरसिज निलयायाः स्तोत्रमेतत् पठन्तः
सकल कुशल सीमाः सार्वभौमा भवन्ति ॥ २५ ॥

॥ गोदा स्तुतिः ॥

श्रीविष्णुचित्त कुल नन्दन कल्पवल्लीं
श्रीरङ्गराज हरिचन्दन योग दृश्यम् ।
साक्षात् शमां करुणया कमलामिवान्यां
गोदामनन्यशरणः शरणं प्रपद्ये ॥ १ ॥

वैदेशिकः श्रुति गिरामपि भूयसीनां
वर्णेषु माति महिमा न हि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे
मौन द्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २ ॥

त्वत्प्रेयसः श्रवणयोरमृतायमानां
तुल्यां त्वदीय मणि नूपुर शिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभिष्टवार्हां
वाचं प्रसन्न मधुरां मम संविधेहि ॥ ३ ॥

कृष्णान्वयेन दधतीं यमुनानुभावं
तीर्थैर्यथावदवगाह्य सरस्वतीं ते ।
गोदे विकस्वर धियां भवती कटाक्षात्
वाचः स्फुरन्ति मकरन्द मुचः कवीनाम् ॥ ४ ॥

अस्मादृशामपकृतौ चिर दीक्षितानां
अह्नाय देवि दयते यदसौ मुकुन्दः ।
तन्निश्चितं नियमितस्तव मौलि दाम्ना
तन्त्री निनादमधुरैश्च गिरां निगुम्भैः ॥ ५ ॥

शोणाऽधरेऽपि कुचयोरपि तुङ्गभद्रा
वाचां प्रवाहनिवहेऽपि सरस्वती त्वम् ।
अप्राकृतैरपि रसैर्विरजा स्वभावात्
गोदाऽपि देवि कमितुर्ननु नर्मदाऽसि ॥ ६ ॥

वल्मीकतः श्रवणतो वसुधात्मनस्ते
जातो बभूव स मुनिः कवि सार्वभौमः ।
गोदे किमद्भुतमिदं यदमी स्वदन्ते
वक्त्रारविन्द मकरन्द निभाः प्रबन्धाः ॥ ७ ॥

भोक्तुं तव प्रियतमं भवतीव गोदे
भक्तिं निजां प्रणय भावनया गृणन्तः ।
उच्चावचैर्विरह सङ्गमजैरुदन्तैः
शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ ८ ॥

मातः समुत्थितवतीमधि विष्णुचित्तं
विश्वोपजीव्यममृतं वचसा दुहानाम् ।
तापच्छिदं हिम रुचेरिव मूर्तिमन्यां

सन्तः पयोधि दुहितुः सहजां विदुस्त्वाम् ॥ ९ ॥

तातस्तु ते मधुभिदः स्तुति लेश वश्यात्
कर्णामृतैः स्तुति शतैरनवाप्त पूर्वम् ।
त्वन्मौलि गन्ध सुभगामुपहृत्य मालां
लेभे महत्तर पदानुगुणं प्रसादम् ॥ १० ॥

दिक् दक्षिणाऽपि परि पक्त्रिम पुण्य लभ्यात्
सर्वोत्तरा भवति देवि तवावतारात् ।
यत्रैव रङ्गपतिना बहुमान पूर्वं
निद्रालुनापि नियतं निहिताः कटाक्षाः ॥ ११ ॥

प्रायेण देवि भवती व्यपदेश योगात्
गोदावरी जगदिदं पयसा पुनीते ।
यस्यां समेत्य समयेषु चिरं निवासात्
भागीरथी प्रभृतयोऽपि भवन्ति पुण्याः ॥ १२ ॥

नागे शयः सुतनु पक्षिरथः कथं ते
जातः स्वयंवर पतिः पुरुषः पुराणः ।
एवं विधाः समुचितं प्रणयं भवत्याः
सन्दर्शयन्ति परिहास गिरः सखीनाम् ॥ १३ ॥

त्वद्भुक्त माल्य सुरभीकृत चारु मौलेः
हित्वा भुजान्तर गतामपि वैजयन्तीम् ।
पत्युस्तवेश्वरि मिथः प्रतिघात लोलाः
बर्हातपत्र रुचिमारचयन्ति भृङ्गाः ॥ १४ ॥

आमोदवत्यपि सदा हृदयं गमाऽपि
रागान्विताऽपि ललिताऽपि गुणोत्तराऽपि ।
मौलि स्रजा तव मुकुन्द किरीट भाजा
गोदे भवत्यधरिता खलु वैजयन्ती ॥ १५ ॥

त्वन्मौलि दामनि विभोः शिरसा गृहीते
स्वच्छन्द कल्पित सपीति रस प्रमोदाः ।
मञ्जु स्वना मधु लिहो विदधुः स्वयं ते
स्वायंवरं कमपि मङ्गल तूर्य घोषम् ॥ १६ ॥

विश्वायमान रजसा कमलेन नाभौ

वक्षःस्थले च कमला स्तन चन्दनेन ।
आमोदितोऽपि निगमैर्विभुरङ्घ्रि युग्मे
धत्ते नतेन शिरसा तव मौलि मालाम् ॥ १७ ॥

चूडा पदेन परिगृह्य तवोत्तरीयं
मालामपि त्वदलकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे
सौभाग्य सम्पदभिषेक महाधिकारम् ॥ १८ ॥

तुङ्गैरकृत्रिम गिरः स्वयमुत्तमाङ्गैः
यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः
सोऽपि त्वदीय कुटिलालक वासिताभिः ॥ १९ ॥

धन्ये समस्त जगतां पितुरुत्तमाङ्गे
त्वन्मौलिमाल्य भर सम्भरणेन भूयः ।
इन्दीवर स्रजमिवादधति त्वदीयानि
आकेकराणि बहुमान विलोकितानि ॥ २० ॥

रङ्गेश्वरस्य तव च प्रणयानुबन्धात्
अन्योन्य माल्य परिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं
न्यूनाधिकत्व समता विषयैर्विवादैः ॥ २१ ॥

दूर्वा दल प्रतिमया तव देह कान्त्या
गोरोचना रुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झित शिखावल कण्ठ शोभं
माङ्गल्यदं प्रणमतां मधुवैरि गात्रम् ॥ २२ ॥

अर्च्यं समर्च्य नियमैर्निगम प्रसूनैः
नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन् निजमाधिराज्यं
मान्या मनु प्रभृतयोऽपि महीक्षितस्ते ॥ २३ ॥

आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं
रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र नासीत्
प्रायेण देवि वदनं परिवर्तितं स्यात् ॥ २४ ॥

गोदे गुणैरपनयन् प्रणतापराधान्
भ्रूक्षेप एव तव भोग रसानुकूलः ।
कर्मानुबन्धि फल दान रतस्य भर्तुः
स्वातन्त्र्य दुर्व्यसन मर्म भिदा निदानम् ॥ २५ ॥

रङ्गे तटिद्गुणवतो रमयैव गोदे
कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्य दुर्विष विनाश सुधा नदीं त्वां
सन्तःप्रपद्य शमयन्त्यचिरेण तापान् ॥ २६ ॥

जातापराधमपि मामनुकम्प्य गोदे
गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्य निर्भरतया जननी कुमारं
स्तन्येन वर्धयति दष्ट पयोधराऽपि ॥ २७ ॥

शतमख मणि नीला चारु कल्हार हस्ता
स्तन भर नमिताङ्गी सान्द्र वात्सल्य सिन्धुः ।
अलक विनिहिताभिः स्रग्भिराकृष्ट नाथा
विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ २८ ॥

इति विकसित भक्तेरुत्थितां वेङ्कटेशात्
बहुगुण रमणीयां वक्ति गोदास्तुतिं यः ।
स भवति बहुमान्यः श्रीमते रङ्गभर्तुः
चरण कमल सेवां शाश्वतीमभ्युपैष्यन् ॥ २९ ॥

॥ चतुःस्लोकी ॥

कान्तस्ते पुतुषोत्तमः फणिपतिः शय्याऽसनं वाहनं
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजः सदयितः त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ! ब्रूमः कथं त्वां वयम् ॥ १ ॥

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः
नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयः
लोकैकेश्वरि ! लोकनाथदयिते ! दान्ते दयां ते विदन् ॥ २ ॥

ईषत् त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक् तदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम् ।
श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित् ॥ ३ ॥

शान्तानन्तमहाविभूति परमं यद् ब्रह्म रूपं हरेः
मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि ता -
न्याहुः स्वैरनरूपरूपविभवैर्गाढोपगूढानि ते ॥ ४ ॥

॥ नन्दनन्दन श्रीकृष्णाष्टकम् ॥

भजे व्रजैकमंडनं समस्तपापखण्डनं
स्वभक्तचित्तरंजनं सदैव नन्दनन्दनम् ।
सुपिच्छगुच्छ-मस्तकं सुनादवेणुहस्तकं
अनंगरंगसागरं नमामि कृष्ण-नागरम् ॥ १ ॥

मनोज-गर्वमोचनं विशाल-लोल-लोचनं
विधूतगोपशोचनं नमामि पद्मलोचनम् ।
करारविन्दभूवरं स्मितावलोकसुन्दरं
महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥ २ ॥

कदम्बसूनकुण्डलं सचारुगण्डमण्डलं
व्रजाङ्गनैकवल्लभं नमामि कृष्ण-दुर्लभम् ।
यशोदया समोदया सगोपया सनन्दया
युतं सुखैकदायकं नमामि गोपनायकम् ॥ ३ ॥

सदैव पादपंकजं मदीयमानसे निजं
दधानमुत्तमालकं नमामि नन्दबालकम् ।
समस्तदोष-शोषणं समस्तलोकपोषणं
समस्तगोप-मानसं नमामि कृष्णलालसम् ॥ ४ ॥

भुवो भरावतारकं भवाब्धिकर्णधारकं
यशोमती-किशू-रकं नमामि दुग्धचोरकम् ।
दृगन्तकान्तभंगिनं सदासदालसंगिनं
दिनेदिने नवं नवं नमामि नन्दसम्भवम् ॥ ५ ॥

गुणाकरं सुखाकरं कृपाकरं कृपावरं
सुरद्विष-न्निकन्दनं नमामि गोपनन्दनम् ।
नवीनगोपनागरं नवीनकेलि-लम्पटं
नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥ ६ ॥

समस्तगोपनन्दनं हृदम्बुजैकमोहनं
नमामि कुंजमध्यगं प्रसन्नभानुशोभनम् ।
निकाम-कामदायकं दृगन्तचारु-सायकं
रसालवेणु-गायकं नमामि कुंजनायकम् ॥ ७ ॥

विदग्ध-गोपिका-मनो-मनोज्ञतल्प-शायिनं
नमामि कुंजकानने प्रवृद्ध-वह्नि-पायिनम् ।
यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम् ।
प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान्
भवेत् स नन्दनन्दने भवे भवे सुभक्तिमान् ॥ ८ ॥

॥ गजेन्द्र मोक्षम् ॥

ग्राहग्रस्ते गजेन्द्रे रुवति सरभसं ताक्ष्र्य मारुह्य धावन्
व्याघूर्णन् माल्यभूषा वसन परिकरो मेघ गम्भीर घोषः ।
आबिभ्राणो रथाङ्गं शरमसि मभयं शङ्ख चापौ सखेटौ
हस्तैः कौमोदकी मप्यवतु हरिरसा वंहसां संहतेर्नः ॥

नक्राक्रान्ते करीन्द्रे मुकुळित नयने मूल मूलेतिखिन्ने
नाहं नाहं नचाहं न च भवति पुनस्तादृशो मादृशेषु
इत्येवं त्यक्तहस्ते सपदि सुरगणे भाव शून्ये समस्ते
मूलं यत्प्रादुरासीत् स दिशतु भगवान् मङ्गळं सन्ततं नः ॥

॥ श्लोकत्रयम् ॥

प्रातः स्मरामि भवभीति महार्ति शान्त्यै
नारायणं गरुड वाहन मञ्जनाभम् ।
ग्राहाभि भूत मदवारण मुक्ति हेतुं
चक्रायुधं तरुण वारिज पत्रनेत्रम् ॥

प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविन्द युगळं परमस्य पुंसः ।
नारायणस्य नरकार्णव तारणस्य
पारायण प्रवण विप्र परायणस्य ॥

प्रातर्भजामि भजता मभयं करं तं
प्राक् सर्व जन्म कृत पाप भयापनुत्यै ।
यो ग्राहवक्त्र पतितान्घ्रि गजेन्द्र घोर
शोक प्रणाशन करो धृत शङ्ख चक्रः ॥

श्लोकत्रयमिदं पुण्यं प्रातरुत्थाय यः पठेत्
लोकत्रय गुरुस्तस्मै दध्यादात्मपदं हरिः ॥

सर्वं श्री कृष्णार्पणमस्तु